चेयमुदकशांतिश्चिरराम्नायश्रुतापिनदृष्टिसरणिमनुप्रासा । यदाऽहंप्राग्भवी
तदाऽलभिषिमहताप्रयासेनबहुकालिकंजीर्णतरंशौनकीयोदकशांतेःपुस्तकमेवं
श्रीमाधवोमाधवस्वरूपिण्याश्रीकृष्णावेणयालंकृतायां सांगलीपुर्यांवेदवेदांग
इचलकरजीनिवासिनांपुस्तकालयात् तद्धस्तलिखितं अल्पकारिकाप्रयोगक्रम
ब्देलिखितंद्वितीयंपुस्तकमध्यगच्छम् । अन्यच्चैकंहरिपुरग्रामनिवासिभिः वेद
प्रयोगपर्यासंपुस्तकमासादयम् । एतत्रितयसाधनेनविद्वद्वर्यसाहाय्येनचधर्मैक
फलकः शौनकीयः प्रतिसरबंधोप्यंतेनिवेशितः । कैश्चिन्मामिमुक्षैर्निर्वर्तितो
षूपलब्धःसोप्युदकशांतिपुस्तकेनसाकं वेदशास्त्रावगाहनविशदीकृतांतरंगेभ्य
शनायप्रादायि । तैश्चस्वाश्रयभूतेभ्यः श्रेष्ठिवर-तुकाराम जावजी

अनेनप्रीयतांदेवश्चंद्रचूडःसदाशिवः ॥ भवानि

# अथशाकलमंत्राणामृष्यादिपाठक्रमेदेवतांतत्वनिर्णयः ।

श्रीगजवदनषड्वदनजनकाभ्यांसच्चिदानंदाभ्यांजगज्जनकाभ्यांपरमशिवाभ्यांनमः ॥ ॥ श्रुतयोयस्यनिश्वासोदुर्गाब्जागीर्धवालवाः ॥ तमहंसच्चिदानंदंपरंसांबंशिवंभजे ॥ १ ॥ ऋष्यादिज्ञानपूर्वाणांमंत्राणांफलदातृता ॥ तत्क्रमस्तुऋषिश्छंदोदेवतेतिप्रमाणतः ॥ २ ॥ सिद्धोऽधुनातुलोकेऽस्मिंल्लुप्तोऽभूत्तत्प्रकाशने ॥ अंतर्यामिप्रेरणयामीमांसेषद्वितन्यते ॥ ३ ॥ ॥ **ननुसर्वानुक्रमण्यां**सूक्तप्रतीकऋक्संख्यऋषिदैवतच्छंदांस्यनुक्रमिष्यामइतिवाक्ये पूर्वमृषिस्ततोदेवताततश्छंदइतिपाठात्तदनुसारेण प्रथममृषिस्ततोदेवताततश्छंदइत्येवतेषांक्रमःसिद्ध्यति तथैवचस्मार्तनिबंधेषुसंस्कारादिप्रयोगग्रंथेषुचाभियुक्तानांलेखनंप्रायोदृश्यते तत्कथंतद्विरुद्धःपूर्वमृषिस्ततश्छंदस्ततोदेवतेति अश्रुतचरःक्रमोऽयमितिचेत् ॥ **सत्यं** ॥ तथाप्ययमेवक्रमोऽभ्युपेयः ॥ नहिउदाहृतवाक्ये अनेनक्रमेणऋष्यादिज्ञातव्यमित्यर्थःसंपद्यते ॥ तत्रज्ञानवाचिवेदनादिशब्दस्य [वेदनार्थकधातोः] विधायकस्यलिंगादेश्चाभावात् सर्वानुक्रमणीवाक्यं नक्रमविधायकं किंतुप्रकृतग्रंथेवक्ष्यमाणऋष्यादिक्रमबोधनार्थकत्वेनपरिभाषारूपं ॥ अतएवअनुक्रमिष्यामइत्येवोक्तं नतु ज्ञानार्थकधातोर्विध्यादिरूपंप्रयुक्तं ॥ तद्भाष्येपि आनुपूर्व्यात्परिपाट्याक्रमिष्यामइत्येवव्याख्यातं ॥ अभियुक्तग्रंथेष्वपिनैतेषामेवंरूपःक्रमइतिलेखनंकुत्रापिदृश्यतेप्रयोगवाक्येषु परंऋषिःदेवताछंदइत्येवंक्रमोदृश्यते नतावन्मात्रेणतथाक्रमोंगीकर्तुंशक्यते बहुप्रमाणविरोधात् ॥ **तथाहि सर्वानुक्रमण्यामेव** नह्येतज्ज्ञानमृतेश्रौतस्मार्तकर्मप्रसिद्धिरिति ऋष्यादिज्ञानस्यावश्यकत्वमुक्त्वा तज्ज्ञान-

फलबोधकत्वेनोदाहृते मंत्राणांब्राह्मणार्षेयच्छंदोदैवतविदित्यादिश्रुतिवाक्ये वित्पदेनऋष्यादिज्ञानस्यकंठरवेणबोधके अस्मदुक्तक्रमेणै-
वऋष्यादिपदपाठात् **सर्वानुक्रमभाष्योदाहृतयोः** ऋष्यादिवेदनतदभावप्रत्यवायविधायकयोः ॥ ऋषिच्छंदोदैवतानिब्राह्मणा-
र्थंस्वराद्यपि ॥ मंत्रंजिज्ञासमानेनवेदितव्यंपदेपदे ॥ अविदित्वाऋषिंछंदोदैवतंयोगमेवच ॥ योऽध्यापयेज्जपेद्वापिपापीयान्जायते-
तुसः ॥ इतिस्मृतिवचसोरपितथैवतत्पाठात् ॥ **शाकलसंहिताभाष्योपोद्धाते**पिऋष्यादिज्ञानाभावेप्रत्यवायःस्मर्यतेइतिवि-
लिख्य एतदेववचनद्वयंप्रमाणत्वेनोपन्यस्य अग्निमीळइत्यादीनांसप्तदशाधिकसहस्रसूक्तानांभाष्यारंभेप्रतिसूक्तं ऋषिच्छंदोदैवतमित्ये-
वंक्रमलेखनात् ॥ अतएवचनित्यत्वमिति**शारीरकसूत्रभाष्योदाहृतायांच**—योहवाअविदितार्षेयच्छंदोदैवतब्राह्मणेनमंत्रेणयाज-
यतिवाध्यापयतिवेत्यादिश्रुतौ ॥ गणकऋषिः निचृद्गायत्रीच्छंदः गणपतिर्देवतेति**गणपत्यथर्वशीर्षे** ॥ ब्रह्माऋषिर्गायत्रीच्छंदः
देवोदक्षिणास्यः ॥ विष्णुर्ऋषिः अनुष्टुप्छंदः देवोदक्षिणास्यः इतिच**दक्षिणामूर्तिरहस्योपनिषदि** ॥ चतुर्वेदस्थानांजी-
वब्रह्मैक्यबोधकानांचतुर्णांमहावाक्यानांऋष्यादिकथनप्रस्तावे परमहंसऋषिः अव्यक्तगायत्रीच्छंदः परमहंसोदेवतेत्येवं **रहस्यो-
पनिषदि**चदेवतायाअंतेपाठात् ॥ विश्वामित्रऋषिश्छंदोगायत्रीदेवतारविः ॥ इति**भारद्वाजस्मृतौ**तथैवपाठात् ॥ **प्रयोगपा-
रिजातेआश्वलायनः** ॥ ब्रह्मास्याद्यज्ञसूत्रस्यमुनिर्गायत्रमीरितम् ॥ छंदोऽनुष्टुप्तथादेवओंकारोप्यथवात्रिवृत् ॥ **स्कांदेसूत-
संहितायांयज्ञवैभवखंडेपंचमेप्रणवाध्याये**—ऋषिर्ब्रह्मास्यमंत्रस्यगायत्रीच्छंदउच्यते ॥ परमात्माभिधःशंभुर्देवतापरिकी-

र्तिता इति ॥ **षष्ठेगायत्र्यध्याये**—भूरादिव्याहृतीनांतुमुनयःपरिकीर्तिताः ॥ अत्रिर्भृगुश्चकुत्सश्चवसिष्ठोगोतमस्तथा ॥ कश्यपश्चांगिराश्चेतिक्रमेणमुनिपुंगवाः ॥ व्याहृतीनांक्रमेणैवछंदांसिकथितानितु ॥ दैवीगायत्रमाद्यंस्यादुष्णिहातदनंतरं ॥ अनुष्टुब्बृहतीपंक्तिस्त्रिष्टुप्चजगतीतथा ॥ अग्निर्वायुस्तथार्कश्चवागीशोवरुणस्तथा ॥ इंद्रश्चविश्वेदेवाश्चक्रमेणैवतुदेवताः ॥ विश्वामित्रोमुनिश्छंदोगायत्रंदेवतारविः ॥ सावित्र्यावेदविच्छ्रेष्ठाःशिवएवाधिदेवता ॥ ओमापोज्योतिरित्येतद्गायत्र्याःशिरउत्तमम् ॥ ऋषिर्ब्रह्मास्यमंत्रस्यछंदोनुष्टुप्प्रकीर्तितम् ॥ देवतापरमात्मैवप्रोक्तोवेदार्थवेदिभिरिति ॥ **सप्तमेहंसविद्याध्याये**—आत्ममंत्रंप्रवक्ष्यामिसमासेननविस्तरात् ॥ ऋषिर्ब्रह्मास्यगायत्रंछंदआत्मैवदेवतेति ॥ **अष्टमेषडक्षराध्याये**—ऋषिर्ब्रह्मास्यमंत्रस्यगायत्रंछंदउच्यते ॥ देवतास्यशिवःसाक्षात्सत्यज्ञानसुखाद्वयइति ॥ **ज्ञानयोगखंडेचतुर्दशोनियमाध्याये**—ऋषिंछंदोधिदैवंचध्यायमानोजपेन्नरइतिचदेवतांतत्वेनैवऋष्यादीनांपाठाच्च ॥ अन्येष्वपिउपनिषत्स्मृतिपुराणेषु एवंविधपाठविशिष्टानिपरःशतानिवचनानिसंति विस्तरसाध्वसान्नेहोपन्यस्यंते ॥ आगमेषुतुऋष्यादीनांदेवतांततयापाठस्यसुप्रसिद्धत्वं ॥ **मंत्रन्यासेपि**—ऋषिश्छंदोदैवतानिशिरोमुखहृदिन्यसेदित्यादिनादेवतांतपाठानुसरणंदृश्यते । तत्कुतःक्वचिद्देवतांतत्वंक्वचिच्छंदोंतत्वमिति अर्धजरतीयस्यविगर्हितत्वात् देवतांतत्वस्यपूर्वोदाहृतश्रुतिस्मृतिपुराणागमादिप्रमाणसिद्धत्वाच्च ॥ नचैतानिप्रमाणानिछंदोंतत्वपरतयानेतुंशक्यंते ॥ तत्राग्निहोत्रंजुहोतियवागूंपचतीत्यादाविवपाठक्रमबाधकार्थक्रमादिनिमित्ताभावात् । वस्तुवृत्तानुग्रहाच्चोक्तप्रमाणानां ॥ **तथाहि** यथालोकेतक्षाकुठा-

 रेणकाष्ठंछिनत्तीत्यादिवाक्येषुछेदनक्रियाकर्तुस्तक्षणस्तत्करणस्यकुठारस्यसाक्षात्संबंधः ॥ तत्क्रियाकर्मीभूतस्यकाष्ठस्यतत्कर्तुस्तक्षणश्चन- 
 साक्षात् किंतुकरणद्वारा ॥ एवंसर्वत्रस्थितिः तथात्रापि ॥ ऋषेःस्तुतिकर्तृत्वान्मंत्रस्यचतत्साधनत्वेनकरणत्वात्ऋषिमंत्रयोरव्यव-
धानेनसंबंधोयुक्तः ॥ देवतायास्तुस्तुत्यत्वेनतत्कर्मत्वात् स्तुतिकरणमंत्रोत्तरमव्यवधानेपितत्कर्तुर्व्यवधानमेवेति ॥ ॥ ननु मंत्रा-
णांकर्मकरणत्वेपिछंदसांतदभावात् कथंतेषांतत्त्वेनऋषिदैवतमध्यवर्तित्वंनियम्यतइतिचेत् मंत्राणांछंदोबद्धतयाछंदसांमंत्रानतिरे-
केणमंत्रगतकरणत्वस्यछंदस्वपिप्राप्तेः ॥ अतएवसर्वानुक्रमे—अर्थेप्सवऋषयोदेवताश्छंदोभिरभ्यधावन्नित्यभिहितंछंदसांकरणत्वं
संगच्छते ॥ व्याख्यातंचतथैवभाष्यकारैः ॥ तथाचतद्भाष्यं—अथऋषिच्छंदोदेवतानांसंबंधमाह अर्थेप्सवइत्यादि ॥ अर्थ्यत-
इत्यर्थःफलं अन्नपुत्रादिमोक्षांतं अर्थमात्माधीनंकर्तुमिच्छंतः छंदोभिरुपायभूतैस्तद्युक्तमंत्रैर्वा अभ्यधावन् श्रद्धयाअगच्छन्
अर्थस्यप्राप्तावयमेवोपायइतिदृढसंकल्पाइत्यादि ॥ अतएवबह्वृचाचार्यैर्भगवद्भिःशौनकमहर्षिभिर्बृहद्देवतानुक्रमण्यां—ऋषिं-
तुप्रथमंब्रूयाच्छंदोब्रूयादनंतरं ॥ पश्चाद्देवंविजानीयात्क्रमएषसनातनइतिऋष्यादिदेवतांतंक्रमंविधाय वैपरीत्ये—नियमोयंजपेहोमे-
ऋषिश्छंदोथदैवतं ॥ अन्यथाचेत्प्रयुंजानस्तत्फलंचात्रहीयतइतिकंठरवेणैवफलाभावोऽभिहितः ॥ तथा गृह्यकारिकाकारोपि—
ऋषिमादौप्रयुंजीतछंदोमध्येनियोजयेत् ॥ देवतामवसानेचमंत्रज्ञोमंत्रसिद्धय इति ॥ ॥ नन्वेवंसर्वप्रमाणसिद्धस्यापि देवतांतपक्ष- 
स्यसर्वेषुनिबंधेषुकुतोऽलेखनमितिचेन्न ॥ रुद्राध्यायपद्धत्यादौदेवतांतत्वस्यलिखितत्वात् ॥ औद्गातृप्रयोगेपि साम्नां ऋष्यादिदेवतांत-

त्वलेखनाच्च ॥ **शांतिसारा**दौतुप्रमाणोपन्यासेऋष्यादिदेवतांतत्वेप्रमाणंविलिख्यप्रयोगक्रमेछंदोंतमलेखि तस्मादेतत्सिध्यति यत्सर्वेष्वपिनिबंधप्रयोगेषुछंदोंतलेखनंतल्लेखकप्रमादपरंपरागतमेवेति ॥ नचस्पष्टेविषयेकथमेवंविधःप्रमादइतिशंक्यं प्रमादावधेरभावात् ॥ दृश्यतेचमहाव्रतसूत्रे महाव्रतस्यपंचविंशतिंसामिधेन्यइत्यादिरूपेपंचमारण्यकत्वभ्रमपरंपरेतिमाधवाचार्यैरभिहितं ॥ यथावात्रैवविषयेप्रायःसर्वनिबंधेषु अग्निमीळेमधुच्छंदाअग्निर्गायत्री होमेविनियोगइत्याद्यनन्वितंलिख्यते तथैवसर्वयाज्ञिकैर्निःशंकंप्रयोगेपठ्यते इदमपिसर्वानुक्रमानुरोध्येवदृश्यते ॥ अग्निंनवमधुच्छंदाइतिप्रतीकंगृह्यते ॥ **सर्वानुक्रमे**, नतत्रविनियोगःकस्यचिद्विवक्षितः तथापि तत्पाठाध्ययनसंस्कृतबुद्धिभिस्तदनुप्रयोगेऽनन्वितमेवयत्पठ्यतेसतुप्रमादएवलेखकादीनामितिमंतव्यं ॥ अन्यथानिबंधकर्तुःशिरसिसआपतेत् ॥ ॥ **ननुसंस्काररत्नमालायां**—ऋषिंचदेवतांछंदोविनियोगंमनोस्तथा ॥ ऋषिश्छंदोदेवतेतिछंदश्चर्षिश्चदेवता ॥ ऋषिश्चदेवताछंदइत्येवंस्यात्त्रिधाक्रमइतिवाक्यद्वयंदृश्यते तदनुरोधेनछंदोंतत्वेपिनदोषइतिचेन्न ॥ उक्तवचनद्वयस्यवेदभाष्यकारादिभिरधृतत्वात्अदृष्टचरछंदऋषिदेवतेतिक्रमविशिष्टत्वाच्चनिर्मूलत्वप्रतीतेः ॥ समूलत्वाग्रहेपिनविकल्पेनछंदोंतत्वविधायकत्वंसंभवति ॥ विकल्पस्यतुल्यबलत्वव्याप्यत्वेनात्रव्यापकाभावात् ॥ **तथाहि** देवतांतत्वंतावच्छ्रुतिस्मृत्यनुगृहीतमितिबलवत् छंदोंतत्वस्यतत्साम्याभावान्नविकल्पार्हतेति ॥ किंबहूक्त्या उक्तवचनद्वयस्यस्मृतित्वस्वीकारेपि विरोधाधिकरणस्मृत्यनवकाशाधिकरणन्यायाभ्यामप्रामाण्यमेवावशिष्यते ॥ तयोर्न्याययोःसंग्राहकाः श्लोकाश्चेत्थं ॥ **पूर्वमीमांसायांप्रथमाध्यायतृतीयपादेद्वितीयाधिकरणं** ॥

शौन.उद. औदुंबरीवेष्टनीयासर्वेत्येषास्मृतिर्मितिः ॥ अमितिर्वेतिसंदेहेमितिःस्यादष्टकादिवत् ॥ १ ॥ औदुंबरींस्पृशन्गायेदितिप्रत्यक्षवेदतः ॥ देवतांतत्व.

॥ ३ ॥ विरोधान्मूलवेदस्याननुमानान्नमूलता इति ॥ २ ॥ अयमर्थः—अध्वरेमहावेद्यांसदोनामकस्य मंडपस्यमध्येकाचिदुदुंबरशाखास्तं-
भत्वेननिखाताभवति तामुद्दिश्यवस्त्रवेष्टनंस्मर्यते—औदुंबरीसर्वावेष्टयितव्या इति ॥ तत्रसंशयः एषास्मृतिःप्रमाणंनवेति ॥ तत्रपूर्वाधि-
करणे—अष्टकाःकर्तव्याः इत्यस्याःस्मृतेः वेदमूलानुमापकत्वेनप्रामाण्यमुक्तं तेनैवन्यायेनसर्ववेष्टनस्मृतिःप्रमाणमितिपूर्वःपक्षः ॥ औदुं-
बरींस्पृष्ट्वोद्गायेदितिप्रत्यक्षश्रुतौस्पर्शोविधीयते । नचासौसर्ववेष्टनेसत्युपपद्यते । तथाचसर्ववेष्टनस्मृतिमूलभूतवेदानुमानस्यप्रत्यक्षश्रुति-
विरुद्धस्यकालात्ययापदिष्टत्वेन निर्मूलासर्ववेष्टनस्मृतिरप्रमाणमितिसिद्धांतइति ॥ उत्तरमीमांसाद्वितीयाध्यायप्रथमपादेप्र-
थमाधिकरणं ॥ सांख्यस्मृत्यास्तिसंकोचोनवावेदसमन्वये ॥ धर्मेवेदःसावकाशःसंकोचोऽनवकाशया ॥ १ ॥ प्रत्यक्षश्रुतिमूलाभिर्म-
न्वादिस्मृतिभिःस्मृतिः ॥ अमूलाकापिलीवाध्यानसंकोचोऽनयाततइति ॥ २ ॥ अस्मिन्पादेसर्वेष्वधिकरणेषुपूर्वाध्यायोक्तःसमन्वयोवि-
षयः॥अत्रअस्मिन्नधिकरणेवैदिकस्यसमन्वयस्यसांख्यस्मृत्यासंकोचोस्तिनवेतिसंशयः । संकोचोस्तीतितावत्प्राप्तं।कुतः । सांख्यस्मृतेरनव
काशत्वेनप्रबलत्वात् । सांख्यस्मृतिर्हिवस्तुतत्वनिरूपणायैवप्रवृत्ता नत्वनुष्ठेयंधर्मंक्वचिदपिप्रतिपादयति ॥ यदितस्मिन्नपिवस्तुन्यसौन-
संकीर्येततदानिरव काशास्यात् । वेदस्तुधर्मंब्रह्मणीप्रतिपादयन्ब्रह्मण्येकस्मिन्बाध्यमानोपिधर्मेसावकाशः ॥ तस्मादनवकाशयास्मृत्या- ॥ ३ ॥
सावकाशस्यवेदस्य संकोचोयुक्तइतिप्राप्तेब्रूमः ॥ सांख्यस्मृत्यावेदस्यसंकोचोनयुक्तः ॥ कुतः ॥ मन्वादिस्मृतिभिर्ब्रह्मकारणवादिनीभिर्वा-

धितत्वात् । प्रबलाहिमन्वादिस्मृतयः प्रत्यक्षवेदमूलत्वात् । नतथाकापिलस्मृतेःप्रधानकारणवादिन्याःमूलभूतंकंचनवेदमुपलभामहे । तथादृश्यमानवेदवाक्यानांब्रह्मपरत्वस्यपूर्वमेवनिर्णीतत्वात् । तस्मान्नसांख्यस्मृत्यावेदस्यसंकोचोयुक्तः ॥ ॥ ननुऋषिदैवतच्छंदांस्यनुक्रमिष्यामइत्यभिहितस्यऋष्यादेर्वेदनेनविनावैयर्थ्यादत्रैववेदनविधिःकल्प्यः । कल्पितेचतस्मिन्स्थानात् ऋषिदैवतच्छंदइत्येवक्रमःसंगच्छतइतिचेत् ॥ न ॥ वेदनविधिंविनापिऋष्यादिज्ञानस्यावैयर्थ्यात् ॥ तथाहि **आश्वलायनश्रौतसूत्र अध्यायः ३ खंडः २** ॥ यथऋषिवाप्राजापत्येतुजामदग्न्यइत्यादौ ऋषिज्ञानमपेक्षितं ॥ [अ० २ खं० १४] गायत्र्यावती त्रिष्टुब्वती अपिवान्यच्छंदसोनतुयाज्याहसीयसीनोष्णिङ्नबृहतीत्यादौछंदोज्ञानमाकांक्षितं ॥ [खं० ३ **आग्नेयीभिश्च** अ० १ खं० ६] ॥ अपिवान्यांवैष्णवीमित्यादौदेवतावगमोऽभीप्सितः । तस्मान्नऋष्याद्युक्तिरपार्था ॥ नाप्यत्रवेदनविधिःकल्पयितुंयुक्तः ॥ द्रव्यदेवतार्थवादादीनांविधिकल्पनहेतूनामत्राभावात् ॥ ब्राह्मणार्षेयच्छंदोदैवतविदित्युत्तरवाक्येएवविधिःकल्प्यः ॥ याजनाध्यापनाभ्यांश्रेयोऽधिगच्छत्येताभ्यामेवानेवंविदोयातयामानिच्छंदांसीत्यादिवेदनावेदनस्तुतिनिंदार्थवादात् ॥ यत्स्तूयतेतद्विधीयतइतिहिन्यायः **पूर्वतंत्रेमाधवाचार्यैःश्लोकैःसंगृहीतः** ॥ सचैवं [ अ० १ पा० ४ **अधिकरणं १९** ] शर्कराउपधत्तेऽक्तास्तेजोवैघृतमत्रकिं ॥ तैलादिनांजिताअक्ताघृतेनैवाथवांजनं ॥ १ ॥ तैलादिनापिमुख्यत्वादसंजातविरोधनात् ॥ अप्राप्तार्थत्वतश्चास्यविधेर्वादाद्वलित्वतः ॥ २ ॥ सामान्यमननुष्ठेयंविशेषस्तुविधौनहि ॥ घृतेनैवांजनंवाक्यशेषात्संदिग्धनिर्णयात् ॥ ३ ॥ अर्थवादगता-

चेयंस्तुतिर्घृतमुपेयुषी ॥ बोधयंतीविधेयत्वं घृतस्यगमयेद्विधिमिति ॥ ४ ॥ नचदेवतांतत्वमेवचेदिष्टंउपक्रमएवानुक्रमिष्यामइति-
प्रतिज्ञायांकुतोदेवतांतत्वमनभिहितमितिवाच्यं ॥ उक्तःपर्यनुयोगोनास्मासुकिंतुऋषावेवयुक्तः ॥ तथापि भगवतोऋषेराशयंप्रवदामः ॥
यत्रहिऋषिदैवतयोरैक्यंयत्रवातयोःसंवादस्तत्रऋषिदैवतयोरव्यवधानेएकप्रयत्नेनलघुसूत्रेणकथनंनिर्वहति ॥ छंदोव्यवधानेतुप्रयत्नांत-
रंगुरुसूत्रकरणमापततीति ॥ **तथाहि** ॥ सावित्रीसूर्यात्मदैवतमानुष्टुभं ॥ अत्रचेच्छंदोमध्येनिविष्टंस्यात्तदा सावित्रीसूर्यानुष्टुभं सावि-
त्रीसूर्यादैवतमितिगौरवं ॥ तथा वागांभृण्यात्मानंतुष्टावद्वितीयाजगती ॥ अत्रवागांभृणीद्वितीयाजगतीवागांभृण्यात्मानंतुष्टावेति
पूर्ववत्पुनरुक्तिगौरवापातः ॥ एवं पौलोमीशच्यात्मानंतुष्टावानुष्टुभमित्यादिषुज्ञेयं ॥ संवादस्थलेपि सौचीकोग्निरपःप्रविश्यदेवैः
समवदुत्तरैस्त्रिभिरित्यत्रैकप्रयत्नेनऋषिदैवतोक्तिः छंदोमध्यत्वेनैवंलाघवमितिज्ञेयमन्यत्रापि ॥ तस्मान्नार्षग्रंथेष्वतिशंक्यं ॥ इत्थंचसर्व-
मंत्रेषुऋषिच्छंदोदैवतमित्येवंक्रमेणैवज्ञातव्यमितिसिद्धं ॥ शिष्यबुद्धिवैशद्यार्थमेतावान्प्रपंचःकृतः ॥ वस्तुतस्तुश्रीमद्भगवत्पादैःशारी-
रकेसंगृहीतात्—योहवाअविदितार्षेयच्छंदोदैवतब्राह्मणेनमंत्रेणयाजयतिवाध्यापयतिवास्थाणुंवर्च्छतिगर्तंवाप्रपद्यतेतस्मादेतानिमंत्रेमंत्रे-
विद्यादितिछांदोग्यविधेः तदनुवादकात्मंत्राणांब्राह्मणार्षेयच्छंदोदैवतवित् याजनाध्यापनाभ्यांश्रेयोधिगच्छत्येताभ्यामेवानेवंविदोयात
यामानिच्छंदांसिभवंतिस्थाणुंवर्च्छतिगर्तंवापात्यतेप्रमीयतेवापापीयान्भवतीतिविज्ञायतइत्यनुक्रमणीवाक्याचऋषिच्छंदोदैवतज्ञानंविस्प-
ष्टतरमेवानतिशंक्यंप्रथतइतिशिवं ॥ ॥ **समासोयंदेवतांतत्वनिर्णयनिबंधः** ॥

## अथशौनकोक्तोदकशांतिकारिका ।

श्रीकाशीविश्वेश्वरायनमः ॥ श्रीभागीरथ्यैनमः ॥ विश्वेशंमाधवंढुंढिंदंडपाणिंचभैरवं ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकाम् ॥ १ ॥ अथशौनकोक्ताउदकशांतिः ॥ अथातःसंप्रवक्ष्यामिशांतिंचोदकपूर्विकाम् ॥ सर्वरोगनिरासार्थंग्रहोपद्रवशांतये ॥ १ ॥ मृत्युंजयप्रीतयेचआयुरारोग्यवृद्धये ॥ श्रीर्यशःपुत्रकामेनकार्यावैप्रतिवत्सरम् ॥ २ ॥ गणेशपूजनंकार्यंस्वस्तिवाचनमेवच ॥ चतुरोब्राह्मणान्वृत्वापूर्वादिषुचतुर्षुच ॥ ३ ॥ संस्थाप्यतान्स्थंडिलादिकर्मकुर्याद्यथाविधि ॥ हस्तमात्रेस्थंडिलेतुषड्लेखाउल्लिखेत्ततः ॥ ४ ॥ चतुर्दिक्षुपरिस्तीर्यकुशषोडशकूर्चकैः ॥ फलपुष्पाणिसंस्थाप्यमध्येकलशमुत्तमं ॥ ५ ॥ स्वशाखोक्तविधानेनस्थापयित्वासुशोभनम् ॥ रत्नक्षेपोत्तरंक्षीरमाप्यायस्वेतिमंत्रतः ॥ ६ ॥ गोमूत्रमपिगायत्र्यादधिक्राव्णःक्षिपेद्दधि ॥ घृतंमिमिक्षेमंत्रेणघृतंक्षिप्स्वाहिरण्यकम् ॥ ७ ॥ पूर्णपात्रंनिधायाथकलशंपूजयेत्ततः ॥ संस्थाप्यमध्येब्रह्माणंविष्णुंतद्दक्षिणेतथा ॥ ८ ॥ रुद्रंतदुत्तरेइंद्रंयमंवरुणमेवच ॥ सोमंचैवचतुर्दिक्षुपूजयेच्चयथाविधि ॥ ९ ॥ संस्पृश्यकलशंसर्वेकुशहस्तास्तुऋत्विजः ॥ पादशोऽर्धर्चशःसर्वांजपेयुर्वेदमातरं ॥ १० ॥ अग्निमीळेनवर्चंचवेदादित्रितयंतथा ॥ आपोहिष्ठेतिसूक्तंचएतोन्विंद्रमितितृचं ॥ ११ ॥ ऋतंचेतितृचंचैवप्रशर्धायेत्यृचंतथा ॥ स्वस्तिनोमिमीतांपंचर्चंसूक्तंस्वादिष्ठयेतिच ॥ १२ ॥ सूक्तंरक्षोहणमितिरात्रीसूक्तंततोजपेत् ॥ कृणु-

शौन. उद. ब्वपंचदशकंतरत्समंदीचतुष्टयम् ॥ १३ ॥ सहस्रशीर्षासूक्तंस्यादतोदेवाश्चषड्ऋचः ॥ विष्णोर्नुकंजपेत्सूक्तंसंवामितिपरस्तथा ॥१४॥ कारिकाः
॥ ५ ॥ श्रीसूक्तंशिवसंकल्पंविहिहोत्रेतिपंचकं ॥ शंनःपंचदशर्चंचस्वप्नःस्वप्नेतिसूक्तकं ॥ १५ ॥ त्यमूषुवाजिनंतिस्रोमुंचामित्वेतिपंचकं ॥
स्योनापृथिविद्रविणोदाःसवितापश्चातान्नवोनवः ॥ १६ ॥ विद्युन्नयोलूकयातुंपिशंगभृष्टिमिमाऋचः ॥ रौद्रान्सौरान्सर्वमंत्रान्सुरूप-
कृत्नुंदशैवच ॥ १७ ॥ परेयिवांसंसूक्तंचतथायच्चिद्धितेइति ॥ इंद्रत्वावृषभंसूक्तंतथायत्तेयमंजपेत् ॥ १८ ॥ नहितेक्षत्रमित्याद्या
जपेयुस्तेऋचोदश ॥ स्वादोरभक्षिसूक्तंचजपेयुस्तेद्विजर्षभाः ॥ १९ ॥ अभिमंत्र्यजलंत्वेभिःपूजांतस्यविधायच ॥ कलशस्थोदकेनै-
भिर्गृहिणंत्वभिषेचयेत् ॥ २० ॥ गणानांत्वाजातवेदसआपोहिष्ठेतिचत्रयः ॥ समुद्रज्येष्ठाश्चत्वारइमाआपइतित्रयम् ॥ २१ ॥
इंद्रोअंगेतिषण्मंत्रान्यदंतीतिचपंचकं ॥ त्रिभिष्ट्वंदेवपंचर्चःशतंजीवेतिऋग्द्वयं ॥ २२ ॥ त्यमूषुवाजिनंतिस्रोमहित्रीणामितितृचं ॥
मुंचामित्वेतिपंचर्चोयेयज्ञेनेतिसूक्तकम् ॥ २३ ॥ त्र्यंबकंतच्छंयोरेतिनमोब्रह्मणइत्यपि ॥ पौराणाश्चाशिषोवाच्याऋत्विग्भिःशांतमा-
नसैः ॥ २४ ॥ एवंकृताभिषेकस्तुकर्मसाद्गुण्यहेतवे ॥ आचार्यादीन्पूजयित्वादक्षिणाभिस्तुतोषयेत् ॥ २५ ॥ ब्राह्मणान्भोजयेच्चै-
वंसप्ताहंशांतिकंचरेत् ॥ पंचाहंवात्र्यहंवापिएकाहंवापिशक्तितः ॥ सर्वान्कामानवाप्नोतिभगवान्शौनकोऽब्रवीत् ॥ २६ ॥ इति- ॥५॥
शौनकोक्तोदकशांतिकारिकाः ॥

श्रीविश्वंभरायनमः ॥ ॥ अथशौनकोक्तोदकशांतिप्रयोगः ॥ अथसपत्नीकोयजमानः कृतनित्यक्रियः आचम्य-पवित्रपाणिः प्राणानायम्यइष्टदेवतागुर्वादींश्चनमस्कृत्य देशकालौसंकीर्त्य ॥ अमुकगोत्रस्यामुकशर्मणःसपरिवारस्यमम अमुकेष्टफलावाप्तिद्वाराश्रीब्रह्मादिदेवताप्रीत्यर्थंशौनकोक्तांउदकशांतिंकरिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थंमहागणपतिपूजनं-पंचवाक्यैःपुण्याहवाचनं आचार्यवरणंचकरिष्ये इतिसंकल्प्य ॥ स्वस्तिवाचने कर्मांगदेवता ब्रह्मादयः प्रीयंतां ॥ स्व-स्तिवाचनांतेयजमानः अस्मिन्नुदकशांतिकर्मणिआचार्यंत्वामुं (अमुकशर्माणं) वृणेइत्याचार्यंवृत्वा अन्यांस्त्रीन्ब्राह्मणांश्च-वृत्वा संप्रार्थ्य स्थंडिलादिकर्मकारयेत् ॥ ततःप्राङ्मुखआचार्यआचांतः ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ १ ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामविरोधेनशांतिकर्मसमा-रभे ॥ २ ॥ इतिसर्षपान्विकीर्य ॥ ततःपंचगव्येनभूमिप्रोक्षणंकार्यं ॥ पंचगव्यनिर्माणप्रकारः ॥ गायत्र्यागाथिनोविश्वा-मित्रोगायत्रीसविता ॥ गोमूत्रग्रहणेविनियोगः ॥ ॐतत्सवितुर्वरेण्यं० प्रचोदयात् ॥ इतिताम्रायामाषाष्टकमितंगोमूत्रंकां-स्यपात्रेक्षिपेत् ॥ गंधद्वारामित्यस्यानंदोऽनुष्टुप्श्रीः गोमयग्रहणेवि० ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीं-सर्वभूतानांतामिहोपह्वयेश्रियं ॥ इतिश्वेतायाःषोडशमाषमितंगोमयंक्षिपेत् ॥ आप्यायस्वेत्यस्यराहूगणोगोतमोगायत्रीसोमः

१ परिशिष्टम् ।

शौनकीया. पयोग्रहणेवि० ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं ॥ भवावाजस्यसंगथे ॥ इतिकांचनवर्णायाद्वादशमापमितं- उदकशां०
॥ ६ ॥ पयःक्षिपेत् ॥ दधिक्राव्णइत्यस्यवामदेवोऽनुष्टुप्दधिक्रात्रा दधिग्रहणेवि० ॥ ॐदधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥
सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ इतिनीलायादशमापमितंदधिक्षिपेत् ॥ शुक्रमसीत्यस्यप्रजापतिर्यजुराज्यं आज्य-
ग्रहणेवि० ॥ ॐशुक्रमसिज्योतिरसितेजोसि ॥ इतिकृष्णायामापाष्टकमितंआज्यंक्षिपेत् ॥ देवस्यत्वेत्यस्यप्रजापतिर्यजु-
रुदकम् कुशोदकग्रहणेवि० ॥ ॐ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां ॥ इतिमापचतुष्टयमितंसप्तभिः
कुशैःस्रावितमुदकंक्षिप्त्वा ॥ प्रणवस्यब्रह्माऋषिः दैवीगायत्रीच्छंदः अग्निर्देवता पंचगव्यालोडनेवि० ॥ ॐ इतियज्ञिय-
काष्ठेनालोड्य तत्सप्तदर्भकृतपवित्रंतत्पात्रेनिधायतेनभूमिंप्रोक्षेत् ॥ शुचीवोहव्येत्यस्यमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप्मरुतः पंचग-
व्येनभूमिप्रोक्षणेवि० ॥ ॐ शुचीवोहव्यामरुतःशुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयञ्छुचि-
जन्मानःशुचयःपावकाः ॥ अग्निःशुचिव्रततमइतिद्वयोरांगिरसोविरूपोगायत्र्यग्निः भूमिप्रोक्षणेवि० ॥ ॐ अग्निःशुचि-
व्रततमःशुचिर्विप्रःशुचिःकविः ॥ शुचीरोचतआहुतः ॥ १ ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्यर्चयः ॥२॥
एतोन्विंद्रमितितिसृणां आंगिरसस्तिरश्चीरनुष्टुप्इंद्रः भूमिप्रोक्षणेवि० ॥ ॐएतोन्विंद्रंस्तवामशुद्धंशुद्धेनसाम्ना ॥ शुद्धैरुक्थैर्वा- ॥ ६ ॥

---

१ परशाखीयः । २ ऐ. ब्राह्मणम् ।

वृध्वांसंशुद्धआशीर्वान्ममत्तु ॥ १ ॥ इंद्रंशुद्धोनआगहिशुद्धः शुद्धाभिरूतिभिः । शुद्धोरयिंनिधारयशुद्धोममद्धिसोम्यः ॥ २ ॥ इंद्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे । शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि ॥ ३ ॥ आपोहिष्ठेतितृचस्यआंबरीषः सिंधुद्वीपोगायत्रीआपः शुद्धोदकेनभूमिप्रोक्षणेवि० ॥ ॐ आपोहिष्ठामयोभुवः० ॥ ऋ० ३ ॥ ततःकृतांजलिपुटस्तिष्ठन् ॥ ॐ स्वस्त्ययंनंताक्ष्र्यमरिष्टनेमिंमहद्भूतंवायसंदेवतानां । असुरघ्नमिंद्रसखंसमत्सुबृहद्यशोनावमिवारुहेम ॥ १ ॥ अंहोमुचं-मांगिरसंगयंचस्वस्त्यात्रेयंमनसाचताक्ष्र्यं । प्रयतपाणिःशरणंप्रपद्येस्वस्तिसंबाधेष्वभयंनोअस्तु ॥ २ ॥ देवाआयांतु ॥ यातुधानाअपयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ भूमौप्रादेशंकुर्यात् ॥ ततःअरत्निमात्रंचतुरंगुलोन्नतंस्थंडिलंविधायगोमये-नोपलिप्यगृह्योक्तविधिनापड्लेखाउल्लिख्य पूर्वादिदिक्षुषोडशषोडशदर्भकूर्चैःपरिस्तीर्य प्रतिदिशंफलपुष्पादीनिनिधाय क-लशंसुगंधिधूपधूपितंकुर्यात् ॥ ॥ ततः महीद्यौरितिमंत्रस्यकाण्वोमेधातिथिर्गायत्रीद्यावापृथिव्यौ भूमिस्पर्शनेवि० ॥ ॐमहीद्यौःपृथिवीचंनइमंयज्ञंमिमिक्षतां ॥ पिपृतांनोभरीमभिः ॥ १ ॥ ओषधयइतिमंत्रस्यआथर्वणोभिषगनुष्टुवोषधयः तंदुलपुंजकरणेवि० ॥ ॐ ओषधयःसंवदंतेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥ २ ॥ आकलशेष्विति-मंत्रस्यकाश्यपोसितोगायत्रीसोमःपवमानः कलशस्थापनेवि० ॥ ॐआकलशेषुधावतिपवित्रेपरिषिच्यते । उक्थैर्यज्ञेषु

१ परिशिष्टम् । ४ । ३ । ७ ।

वर्धते ॥ ३ ॥ इमंमेगंगइतिमंत्रस्यप्रैयमेधः सिंधुक्षित्जगतीनद्यः तीर्थजलेनकलशपूरणेवि० ॥ ॐइमंमेगंगेयमुनेसरस्वति-
शुतुद्रिस्तोमंसचतापरुष्ण्या । असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ४ ॥ गंधद्वारामितिमंत्रस्यानंदोनु-
ष्टुप्श्रीः चंदनक्षेपणेवि० ॥ ॐगंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं । ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं ॥ इतिचं-
दनंनिक्षिप्य चंदनादिनाअनुलिप्यपुष्पमालाविभूषितंकृत्वा ॥ ५ ॥ याओषधीरितिमन्त्रस्याथर्वणोभिषगनुष्टुब्वोषधयः कल-
शेओषधिक्षेपणेवि० ॥ ॐयाओषधीःपूर्वाजातादेवेभ्यस्त्रियुगंपुरा । मनैनुबभ्रूणामहंशतंधामानिसप्तच ॥ इतिओषधीर्नि-
क्षिप्य ॥ ६ ॥ कांडात्कांडादितिमन्त्रस्यहिरण्यगर्भोनुष्टुप्दूर्वाः कलशेदूर्वाक्षेपणेवि० ॥ ॐ कांडात्कांडात्प्ररोहंतीपरुषः-
परुषस्परि । एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ इतिदूर्वानिक्षिप्य ॥ ७ ॥ अश्वत्थेवइतिमन्त्रस्याथर्वणोभिषगनुष्टुब्वोषधयः
कलशेपंचपल्लवक्षेपणेवि० ॥ ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषं ॥ इतिपंच-
पल्लवान्निक्षिप्य ॥ ८ ॥ स्यवतिभीमइत्यस्यवैश्वामित्रोरेणुर्जगतीसोमःपवमानः पंचत्वक्क्षेपणेवि० ॥ ॐस्यवतिभीमोवृषभ-
स्तविष्ययाशृङ्गेशिशानोहरिणीविचक्षणः । आयोनिंसोमःसुकृतंनिषीदतिगव्ययीत्वग्भवतिनिर्णिगव्ययी ॥ ९ ॥ स्योना-
पृथिवीत्यस्यकाण्वोमेधातिथिर्गायत्रीपृथिवी सप्तमृत्क्षेपणेवि० ॥ ॐस्योनापृथिविभवानृक्षरानिवेशनी । यच्छानःशर्मसप्र-
थः ॥ १० ॥ याःफलिनीरित्यस्याथर्वणोभिषगनुष्टुब्वोषधयः कलशेफलक्षेपणेवि० ॥ ॐयाःफलिनीर्याअफलाअपुष्पा-

याश्चपुष्पिणीः । बृहस्पतिप्रसूतास्तानोमुंचन्त्वंहसः ॥ ११ ॥ सहिरत्नानीतिमन्त्रस्यआत्रेयःश्यावाश्वोगायत्रीसविता कलशेपं-
चरत्नक्षेपणेवि० ॥ ॐसहिरत्नानिदाशुषेसुवातिसविताभगः । तंभागंचित्रमीमहे ॥ १२ ॥ आप्यायस्वेत्यस्यराहूगणो-
गोतमोगायत्रीसोमः कलशेपयःक्षेपणेवि० ॥ ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं । भवावाजस्यसंगथे ॥ १३ ॥
गायत्र्यागाथिनोविश्वामित्रोगायत्रीसविता कलशेगोमूत्रक्षेपणेवि० ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः
प्रचोदयात् ॥ १४ ॥ दधिक्राव्णइत्यस्यगौतमोवामदेवोनुष्टुप्दधिक्रावा कलशेदधिक्षेपणेवि० ॥ ॐदधिक्राव्णोअकारिषं-
जिष्णोरश्वस्यवाजिनः । सुरभिनोमुखाकरत्प्रणआयूंषितारिषत् ॥ १५ ॥ घृतंमिमिक्षइत्यस्यशौनहोत्रःशौनकोगृत्समदस्त्रि-
ष्टुप्स्वाहाकृतयः कलशेघृतक्षेपणेवि० ॥ ॐघृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम । अनुष्वधमावहमादयस्वस्वा-
हाकृतंवृषभवक्षिहव्यं ॥ १६ ॥ हिरण्यरूपइतिमन्त्रस्यशौनहोत्रःशौनकोगृत्समदस्त्रिष्टुवपांनपात् कलशेहिरण्यक्षेपणेवि० ॥
ॐहिरण्यरूपःसहिरण्यसंदृगपांनपात्सेदुहिरण्यवर्णः ॥ हिरण्ययात्परियोनेर्निषद्याहिरण्यदाददत्यन्नमस्मै ॥ १७ ॥ युवा-
सुवासाइत्यस्यगाथिनोविश्वामित्रस्त्रिष्टुब्यूपः वस्त्रयुग्मेन सूत्रेणवाकलशवेष्टनेवि० ॥ ॐयुवासुवासाःपरिवीतआगात्सउश्रे-
यान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंतिस्वाध्योमनसादेवयंतः ॥ १८ ॥ पूर्णादर्वीतिमंत्रस्यहिरण्यगर्भस्त्रिष्टुबिंद्रः

१ सौत्रोमंत्रः ।

शौनकीया. ॥ ८ ॥

कलशेपूर्णपात्रनिधानेवि० ॥ ॐपूर्णादर्व्विपरापतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥१९॥ इतिसतंडुले- उदकशां०
नसपल्लवेनपात्रेणकलशाननंपिदध्यात् ॥ तत्रअक्षतपुंजेपूगीफलेवा ॥ तत्त्वायामीत्यस्य आजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वा-
मित्रोदेवरातस्त्रिष्टुप्वरुणः वरुणावाहनेवि० ॥ ॐतत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः । अहेळमानोवरु-
णेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ २० ॥ कलशेवरुणंसांगंसपरिवारंसायुधंसशक्तिकंआवाहयामि ॥ ॐवरुणायनमइति-
वरुणंसंपूज्य ॥ ततः पूर्णपात्रमध्येसुवर्णप्रतिमायांपूगफलेवा ब्रह्मजज्ञानमित्यस्यगौतमोवामदेवस्त्रिष्टुप्ब्रह्मा ब्रह्मावाहनेवि० ॥
ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः । सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ॐब्रह्मणेनमः
ब्रह्माणमावाहयामीतिब्रह्माणमावाह्य ॥ १ ॥ तद्दक्षिणे ॥ इदंविष्णुरित्यस्यकाण्वोमेधातिथिर्गायत्रीविष्णुः विष्ण्वावाह-
नेवि० ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ ॐविष्णवेनमः विष्णुमावाहयामि ॥ २ ॥ तदुत्तरे ॥
कद्रुद्रायेत्यस्यघौरःकण्वोगायत्रीरुद्रः रुद्रावाहनेवि० ॥ ॐकद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे । वोचेमशंतमंहृदे ॥ ॐरुद्रा-
यनमः रुद्रंआवाहयामि ॥ ३ ॥ पूर्वस्यां ॥ इंद्रंवइत्यस्यवैश्वामित्रोमधुच्छंदागायत्रीइंद्रः इंद्रावाहनेवि० ॥ ॐइंद्रंवोविश्व-
तस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलः ॥ इति इंद्रं ॥ ४ ॥ दक्षिणस्यां ॥ यमायसोममित्यस्यवैवस्वतोयमोनुष्टुप्यमः ॥ ८ ॥

१ सौत्रोयंमंत्रः ।

यमावाहनेवि० ॥ ॐयमायसोमंसुनुतयमायजुहुताहविः । यमंहयज्ञोगच्छत्यग्निर्दूतोअरंकृतः ॥ इतियमं ॥ ५ ॥ पश्चि-
मायां ॥ तत्त्वायामीत्यस्यआजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोदेवरातस्त्रिष्टुप्वरुणः वरुणावाहनेवि० ॥ ॐतत्त्वायामि-
ब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेळमानोवरुणेहबोध्युरुशंसमानआयुःप्रमोषीः ॥ इतिवरुणं ॥ ६ ॥
उत्तरस्यां ॥ वयंसोमेत्यस्यबंधुश्रुतबंधुविप्रबंधवोगौपायनागायत्रीस्वस्त्ययनं सोमावाहनेवि० ॥ ॐवयंसोमव्रतेतवमनस्तनू-
षुविभ्रंतः । प्रजावंतःसचेमहि ॥ इतिसोमंचावाह्य ॥ ७ ॥ पुरुषसूक्तेनब्रह्माद्यावाहितदेवताभ्योनमइतियथाविभवंषोड-
शोपचारैःपूजयेत् ॥ ॥

ततः दक्षिणादित्रिषुदिक्षूपविष्टैः सकुशहस्तैर्ऋत्विग्भिःसहकलशोदकमभिमंत्रयेत् ॥ ॥ तेचमंत्राः ॥ ॥ गायत्र्यागा-
थिनोविश्वामित्रोगायत्रीसविता ॥ १ ॥ अग्निमीळइतिनवर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदागायत्र्यग्निः ९ ॥२॥३॥४॥५॥
आपोहिष्ठेतिनवर्चस्यसूक्तस्य आंबरीषःसिंधुद्वीपोगायत्री पंचम्यावर्धमाना सप्तम्याःप्रतिष्ठा अंत्ययोरनुष्टुप्आपः ९ ॥ ६ ॥
एतोन्विंद्रमितितिसृणामांगिरसस्तिरश्चीरनुष्टुबिंद्रः ३ ॥ ७ ॥ ऋतंचेतितृचस्यमाधुच्छंदसोघमर्षणोनुष्टुप्भाववृत्तिः ३ ॥८॥
प्रशर्धायेत्यस्यआत्रेयः श्यावाश्वोजगतीमरुतः १ ॥ ९ ॥ स्वस्तिनोमिमीतेतिपंचानांस्वस्त्यात्रेयः आद्यतिसृणांत्रिष्टुप्अंत्य-
योरनुष्टुप्विश्वेदेवाः ५ ॥ १० ॥ स्वादिष्ठयेतिदशर्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदा गायत्री सोमःपवमानः १० ॥ ११ ॥

रक्षोहणमितिपंचविंशत्यृचस्य सूक्तस्य भारद्वाजःपायुस्त्रिष्टुप्अग्नीरक्षोहा २५ ॥१२॥ रात्रीव्यख्यदित्यष्टर्चस्यसूक्तस्यभारद्वाजी-
॥ ९ ॥ रात्रिर्गायत्रीरात्रिः ८ ॥१३॥ कृणुष्वेतिपंचदशर्चस्यसूक्तस्यगौतमोवामदेवस्त्रिष्टुप्अग्नीरक्षोहा १५ ॥ १४ ॥ तरत्समंदीति
चतुर्ऋचस्यसूक्तस्यकाश्यपोवत्सारोगायत्रीसोमःपवमानः ४॥१५॥ सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणोनुष्टुप्अंत्यायास्त्रि-
ष्टुप्पुरुषः १६ ॥ १६ ॥ अतोदेवाइतिषण्णांकाण्वोमेधातिथिर्गायत्रीविष्णुः ६ ॥ १७ ॥ विष्णोर्नुकमिति षडृचस्यसूक्तस्य
औचथ्योदीर्घतमाजगतीविष्णुः ६ ॥ १८ ॥ संवांकर्मणेत्यष्टर्चस्यसूक्तस्यबार्हस्पत्योभरद्वाजस्त्रिष्टुप्इंद्राविष्णू ८ ॥ १९ ॥
परोमात्रयेतिसप्तर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप्विष्णुःचतुर्थ्यादितिसृणामिंद्राविष्णू ७॥२०॥ हिरण्यवर्णामितिपंचदश-
र्चस्यसूक्तस्यआनंदकर्दमचिक्लीतेंदिरासुताऋषयः आद्यतिसृणामनुष्टुप् चतुर्थ्याबृहतीपंचमीषष्ठ्योस्त्रिष्टुप् ततोष्टानामनुष्टुप् अं-
त्यायाःप्रस्तारपंक्तिः श्रीर्देवता १५॥२१॥ यज्जाग्रतइतिषण्णांशिवसंकल्पमन्त्राणांप्रजापतिस्त्रिष्टुप्मनः ६॥२२॥ विहिहो-
त्रेतिपंचर्चस्यसूक्तस्यगौतमोवामदेवोनुष्टुप्वायुः ५॥२३॥ शंनइंद्राग्नीइतिपंचदशर्चस्यसूक्तस्यमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप्विश्वेदेवाः
१५॥२४॥ (स्वप्नःस्वप्नाधिकरणे इतिपरिशिष्टं वर्गः १ ) ॥ २५ ॥ त्यमूषुवाजिनमितितृचस्यसूक्तस्यतार्क्ष्योऽरिष्टनेमिस्त्रिष्टुप् ॥ ९ ॥
तार्क्ष्यः ३॥२६॥ मुंचामित्वेतिपंचर्चस्यसूक्तस्यप्राजापत्योयक्ष्मनाशनस्त्रिष्टुप्अंत्यायाअनुष्टुप्इंद्रः ५॥२७॥ स्योनापृथिवीत्यस्य

१ परिशिष्टम् । २ परिशिष्टम् ।

काण्वोमेधातिथिर्गायत्रीपृथिवी १॥२८॥ द्रविणोदाइत्यस्यआंगिरसःकुत्सस्त्रिष्टुप्अग्निर्द्रविणोदाः १॥२९॥ सवितापश्चाता-
दित्यस्यधानाकोलुशस्त्रिष्टुप्सविता १ ॥ ३० ॥ नवोनवइत्यस्यसूर्यासावित्रीत्रिष्टुप्चंद्रमाः १॥३१॥ विद्युन्नयेत्यस्य ऐलः
पुरूरवास्त्रिष्टुप्उर्वशी १॥३२॥ उलूकयातुमित्यस्यमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप्इंद्रः १॥३३॥ पिशंगभृष्टिमित्यस्यदैवोदासिः-
परुच्छेपोगायत्रीइंद्रः १ ॥ ३४ ॥ कद्रुद्रायेतिनवर्चस्यसूक्तस्यघौरःकण्वोगायत्रीरुद्रः ९ ॥ ३५॥ इमारुद्रायतवसइत्येका-
दशर्चस्यसूक्तस्यआंगिरसःकुत्सोजगतीअंत्यायास्त्रिष्टुप्रुद्रः ११ ॥ ३६ ॥ आतेपितरितिपंचदशर्चस्यसूक्तस्यशौनहोत्रःशौ-
नकोगृत्समदस्त्रिष्टुंप्रुद्रः १५ ॥ ३७ ॥ इमारुद्रायस्थिरधन्वनइतिचतसृणांमैत्रावरुणिर्वसिष्ठोजगतीअंत्यायास्त्रिष्टुप्रुद्रः ४
॥ ३८ ॥ उदुत्यमितित्रयोदशर्चस्य सूक्तस्यकाण्वःप्रस्कण्वोगायत्रीअंत्यचतसृणामनुष्टुप्सूर्यः १३ ॥ ३९ ॥ चित्रंदेवाना-
मितिषण्णांआंगिरसःकुत्सस्त्रिष्टुप्सूर्यः ६ ॥ ४० ॥ इंद्रंमित्रमितिद्वयोर्दीर्घतमाऔचथ्यस्त्रिष्टुप्सूर्यः २ ॥ ४१ ॥ हंसःशु-
चिषदित्यस्यवामदेवोगौतमोजगतीसूर्यः १ ॥ ४२ ॥ यच्चासूर्यइत्यस्यअत्रिर्भौमोनुष्टुप्सूर्यः १ ॥ ४३ ॥ यदद्यसूर्येत्यस्य
वसिष्ठोमैत्रावरुणिस्त्रिष्टुप्सूर्यः १ ॥ ४४ ॥ उत्सूर्यइतितृचस्यवसिष्ठोमैत्रावरुणिस्त्रिष्टुप्सूर्यः ३ ॥ ४५ ॥ उद्वेतीत्यर्धपंच-
मानांवसिष्ठोमैत्रावरुणिस्त्रिष्टुप्सूर्यः ४ ॥ ४६ ॥ उदुत्यद्दर्शतमितितृचस्यवसिष्ठोमैत्रावरुणिः आद्ययोर्बार्हतःप्रगाथःअंत्या-
याःपुरउष्णिक्सूर्यः ३ ॥ ४७ ॥ बण्महांअसीतिद्वयोः जमदग्निर्भार्गवोबार्हतप्रगाथःसूर्यः २ ॥ ४८ ॥ नमोमित्रस्येतिद्वा-

दशर्चस्यसूक्तस्यअभितपाःसौर्यःआद्यनवानांएकादशीद्वादश्योश्चजगती दशम्यास्त्रिष्टुप्सूर्यः १२ ॥ ४९ ॥ सूर्योनोदिव-
स्पात्वितिपंचर्चस्यसूक्तस्यचक्षुःसौर्योगायत्रीसूर्यः ५ ॥५०॥ विभ्राड्बृहदितिचतुर्ऋचस्यसूक्तस्यविभ्राट्सौर्यः आद्यातिसृणां
जगतीअंत्यायाआस्तारपंक्तिःसूर्यः ४ ॥५१॥ आयंगौरितितृचस्यसर्पराज्ञीगायत्रीसूर्यः ३ ॥ ५२ ॥ सुरूपकृत्नुमितिदश-
र्चस्यसूक्तस्यवैश्वामित्रोमधुच्छंदागायत्रीइंद्रः १० ॥ ५३ ॥ परेयिवांसमितिषोडशर्चस्यसूक्तस्यवैवस्वतोयमस्त्रिष्टुप्त्रयोदशी-
चतुर्दश्यंत्यानांअनुष्टुप्उपांत्यायाबृहतीयमः पष्ठ्याःपितरोंगिरोथर्वभृगुनामकाःसप्तम्यादितिसृणांपितरःदशम्यादितिसृणां
श्वानौसारमेयौ १६ ॥५४॥ यच्चिद्धितइत्येकविंशत्यृचस्यसूक्तस्यआजीगर्तिःशुनःशेपःसकृत्रिमोवैश्वामित्रोगायत्रीवरुणः २१
॥ ५५ ॥ इंद्रत्वावृषभमितिनवर्चस्यसूक्तस्य गाथिनोविश्वामित्रोगायत्रीइंद्रः ९ ॥ ५६ ॥ यत्तेयममितिद्वादशर्चस्यसूक्तस्य
बंधुश्रुतबंधुविप्रबंधवोगौपायनाअनुष्टुप्मनआवर्तनम् १२ ॥ ५७ ॥ नहितेक्षत्रमितिदशानामाजीगर्तिःशुनःशेपःसकृत्रिमोवै-
श्वामित्रोदेवरातःप्रथमद्वितीयषष्ठ्यादिपंचदश्यंतानांत्रिष्टुप्तृतीयादिपंचम्यंतानांगायत्री प्रथमायाःकः द्वितीयायाअग्निःतृ-
तीयादिपंचम्यंतानांसवितापष्ठ्यादिपंचदश्यंतानांवरुणः १० ॥ ५८ ॥ स्वादोरभक्षीतिपंचदशर्चस्यसूक्तस्यकाण्वःप्रगाथ-
स्त्रिष्टुप्पंचम्याजगतीसोमः १५ ॥ ५९ ॥ सर्वेषांकलशोदकाभिमन्त्रणेविनियोगः ॥ ॥ तत्रादौगायत्रींपच्छोऽर्धर्चशः
सर्वांक्रमेणजपेत् ॥ ॐतत्सवितुर्वरेण्यं ॥ भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ इतिप्रथमंपच्छः ॥ ॐतत्स-

वितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ इत्यर्धर्चशः ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियो-
योनःप्रचोदयात् । इतिसर्वांजपित्वा ॥ १ ॥ ॐअग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं । होतारंरत्नधातमं ॥ अग्निःपूर्वेभिर्ऋ-
षिभिरीड्योनूतनैरुत ॥ सदेवाँएहवक्षति ॥ अग्निनारयिमश्नवत्पोषमेवदिवेदिवे । यशसंवीरवत्तमं ॥ अग्नेयंयज्ञमध्वरंवि-
श्वतःपरिभूरसि । सइद्देवेषुगच्छति ॥ अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः । देवोदेवेभिरागमत् ॥ १ ॥ यदंगदाशु-
षेत्वमग्नेभद्रंकरिष्यसि । तवेत्तत्सत्यमंगिरः ॥ उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयं । नमोभरंतएमसि ॥ राजंतमध्वराणां-
गोपामृतस्यदीदिविं ॥ वर्धमानंस्वेदमे ॥ सनःपितेवसूनवेग्नेसूपायनोभव ॥ सचस्वानःस्वस्तये ॥ २ ॥ ९ ॥ २ ॥ ॐइ-
षेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मण आप्यायध्वमघ्नियादेवभागमूर्जस्वतीःपयस्वतीःप्रजावती-
रनमीवाअयक्ष्मामावस्तेनईशतमाघशंसोरुद्रस्यहेतिःपरिवोवृणक्तुध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ ३ ॥
अग्नआयाहिवीतयेगृणानोहव्यदातये । निहोतासत्सिबर्हिषि ॥ ४ ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये । शंयोरभिस्रवं-
तुनः ॥ ५ ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन । महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः । उशतीरिं-
वमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ । आपोजनयथाचनः ॥ शंनोदेवीरभिष्टयआपोभवंतुपीतये । शंयोरभि-
स्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनाम् । अपोयाचामिभेषजम् ॥ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा । अग्निंच-

शौनकीया. विश्वशंभुवम् ॥ आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक्च सूर्यं दृशे ॥ इदमापः प्रवहत यत्किंच दुरितं मयि । यद्वाहमभिदु- उदकशां०
द्रोह यद्वा शेप उतानृतम् ॥ आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आगहि तं मा संसृज वर्चसा ९ ॥ ६ ॥ एतो न्वि-
॥ ११ ॥ द्रंस्तवाम शुद्धं शुद्धेन साम्ना । शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥ इंद्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं
निधारय शुद्धो ममद्धि सोम्यः ॥ इंद्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ३ ॥ ७ ॥
ऋतं च सत्यं चाभीद्धात्तपसोध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादधि संवत्सरो अजायत । अहोरा-
त्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षमथो स्वः ३ ॥ ८ ॥ प्रश-
र्धाय मारुताय स्वभानव इमां वाचमनजा पर्वतच्युते । घर्मस्तुभे दिव आपृष्ठयज्वने द्युम्नश्रवसे महि नृम्णमर्चत १ ॥ ९ ॥ स्वस्ति-
नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥ स्वस्तये वायुमु-
पब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवंतु नः ॥ विश्वे देवा नो अद्या स्वस्तये वैश्वा-
नरो वसुरग्निः स्वस्तये । देवा अवंत्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इंद्र- ॥ ११ ॥
श्चाग्निश्च स्वस्ति नो अदिते कृधि ॥ स्वस्ति पंथामनुचरेम सूर्याचंद्रमसाविव । पुनर्ददताघ्नता जानता संगमेमहि ५ ॥ १० ॥ स्वा-
दिष्ठया मदिष्ठया पवस्व सोम धारया । इंद्राय पातवे सुतः ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥

वरिवोधातमोभवमंहिष्ठोवृत्रहंतमः । पर्षिराधोमघोनाम् ॥ अभ्यर्षमहानांदेवानांवीतिमंधसा । अभिवाजमुतश्रवः ॥ त्वा-
मच्छाचरामसितदिदर्थंदिवेदिवे । इंदोत्वेनआशसः ॥ १ ॥ पुनातितेपरिस्रुतंसोमंसूर्यस्यदुहिता । वारेणशश्वतातना ॥
तमीमण्वीःसमर्यआगृभ्णंतियोषणोदश । स्वसारःपार्येदिवि ॥ तमींहिन्वंत्यग्रुवोधमंतिवाकुरंदृतिम् । त्रिधातुवारणंमधु ॥
अभीरुममघ्न्याउतश्रीणंतिधेनवःशिशुम् । सोममिंद्रायपातवे ॥ अस्येदिंद्रोमदेष्वाविश्वावृत्राणिजिघ्नते । शूरोमघाचमंहते
१० ॥ ११ ॥ रक्षोहणंवाजिनमाजिघर्मिमित्रंप्रथिष्ठमुपयामिशर्म ॥ शिशानोअग्निःक्रतुभिःसमिद्धःसनोदिवासरिषःपातुनक्तं ॥
अयोदंष्ट्रोअर्चिषायातुधानानुपस्पृशजातवेदःसमिद्धः ॥ आजिह्वयामूरदेवान्रभस्वक्रव्यादोवृक्त्व्यपिधत्स्वासन् ॥ उभोभया-
विन्नुपधेहिदंष्ट्राहिंस्रःशिशानोवरंपरंच ॥ उतांतरिक्षेपरियाहिराजन्जंभैःसंधेह्यभियातुधानान् ॥ यज्ञैरिषूःसंनममानोअग्नेवाचा-
शल्याँअशनिभिर्दिहानः । ताभिर्विध्यहृदयेयातुधानान्प्रतीचोबाहून्प्रतिभङ्ध्येषां ॥ अग्नेत्वचंयातुधानस्यभिंधिहिंस्राशनिर्हर-
साहंत्वेनं । प्रपर्वाणिजातवेदःशृणीहिक्रव्यात्क्रविष्णुर्विचिनोतुवृक्णं ॥ १ ॥ यत्रेदानींपश्यसिजातवेदस्तिष्ठंतमग्नउतवाचरंतं ।
यद्वांतरिक्षेपथिभिःपतंतंतमस्ताविध्यशर्वाशिशानः ॥ उतालब्धंस्पृणुहिजातवेदआलेभानादृष्टिभिर्यातुधानात् । अग्नेपूर्वोनिज-
हिशोशुचानआमादःक्ष्विंकास्तमदंत्वेनीः ॥ इहप्रब्रूहियतमःसोअग्नेयोयातुधानोयइदंकृणोति । तमारभस्वसमिधायविष्ठनृचक्ष-
सश्चक्षुषेरंधयैनं ॥ तीक्ष्णेनाग्नेचक्षुषारक्षयज्ञंप्रांचंवसुभ्यःप्रणयप्रचेतः । हिंस्रंरक्षांस्यभिशोशुचानंमात्वादभन्यातुधानानृ-

चक्षः ॥ नृचक्षारक्षःपरिपश्यविक्षुतस्यत्रीणिप्रतिशृणीह्यग्रा । तस्याग्नेपृष्टीर्हरसाशृणीहित्रेधामूलंयातुधानस्यवृश्च ॥ २ ॥ त्रि-
र्यातुधानःप्रसितिंतएत्वृतंयोअग्नेअनृतेनहंति । तमर्चिषास्फूर्जयन्जातवेदःसमक्षमेनंगृणतेनिवृङ्धि ॥ तदग्नेचक्षुःप्रतिधेहिरेभे-
शफारुजंयेनपश्यसियातुधानं । अथर्ववज्ज्योतिषादैव्येनसत्यंधूर्वंतमचितंन्योष ॥ यदग्नेअद्यमिथुनाशपातोयद्वाचस्तृष्टंजनयंत-
रेभाः । मन्योर्मनसःशरव्या३जायतेयातयाविध्यहृदयेयातुधानान् ॥ पराशृणीहितपसायातुधानान्पराग्नेरक्षोहरसाशृणीहि ।
परार्चिषामूरदेवान्छृणीहिपरासुतृपोअभिशोशुचानः ॥ पराद्यदेवावृजिनंशृणंतुप्रत्यगेनंशपथायंतुतृष्टाः ॥ वाचास्तेनंशरवऋ-
च्छंतुमर्मन्विश्वस्यैतुप्रसितिंयातुधानः ॥३॥ यःपौरुषेयेणक्रविषासमंक्तेयोअश्व्येनपशुनायातुधानः । योअघ्न्यायाभरतिक्षीरमग्ने-
तेषांशीर्षाणिहरसापिवृश्च ॥ संवत्सरीणंपयउस्रियायास्तस्यमाशीद्यातुधानोनृचक्षः । पीयूषमग्नेयतमस्तितृप्सात्तंप्रत्यंचमर्चिषा-
विध्यमर्मन् ॥ विषंगवांयातुधानाःपिबंत्वावृश्च्यंतामदितयेदुरेवाः । परैनान्देवःसविताददातुपराभागमोषधीनांजयंतां ॥ सनाद-
ग्नेमृणसियातुधानान्नत्वारक्षांसिपृतनासुजिग्युः ॥ अनुदहसहमूरान्क्रव्यादोमातेहेत्यामुक्षतदैव्यायाः । त्वंनोअग्नेअधरादुदक्ता-
त्त्वंपश्चादुतरक्षापुरस्तात् । प्रतितेतेअजरासस्तपिष्ठाअघशंसंशोशुचतोदहंतु ॥ ४ ॥ पश्चात्पुरस्तादधरादुदक्तात्कविःकाव्येनपरि-
पाहिराजन् । सखेसखायमजरोजरिम्णेऽग्नेमर्ताँअमर्त्यस्त्वंनः ॥ परित्वाग्नेपुरंवयंविप्रंसहस्यधीमहि । धृषद्वर्णंदिवेदिवेहंतारंभंगुरा-
वतां ॥ विषेणभंगुरावतःप्रतिष्मरक्षसोदह । अग्नेतिग्मेनशोचिषातपुरग्राभिर्ऋष्टिभिः ॥ प्रत्यग्नेमिथुनादहयातुधानाकिमीदिना ।

